ओ३म्

# वैशेषिकदर्शनम्

## स्वामिब्रह्ममुनिभाष्योपेतम्

भाष्यकारः
**स्वामी ब्रह्ममुनिः परिव्राजको विद्यामार्तण्डः**

प्रकाशक
**वानप्रस्थ साधक आश्रम**
आर्यवन, रोजड़, गुजरात

प्रकाशक : **वानप्रस्थ साधक आश्रम**
आर्यवन, रोजड़, पत्रालय-सागपुर
जिला-साबरकांठा, गुजरात-३८३३०७
चलभाष : ९४२७०५९५५०
E-mail : vaanaprastharojad@gmail.com
Website : www.vaanaprastharojad.org

**संस्करण** : जून २०२१ ई० (वि०सं० २०७८, ज्येष्ठ)

**मूल्य** : १००.०० रुपये

टाईप-सैटिंग : **स्वस्ति कम्प्यूटर्स,** करनाल
दूरभाष : ०९२५५९-१२३१४

मुद्रक : **राज ऑफसेट,** ११, पूनाजी इस्टेट,
धोबीघाट, दूधेश्वर, अहमदाबाद

# प्रकाशकीयम्

परब्रह्मणः प्राप्तं ज्ञानमपौरुषेया वेदाः न केवलं स्वतःप्रमाणमपितु वेदाध्ययनमार्यधर्मः। उक्तञ्चर्षिणा—''वेदाः सर्वासां सत्यविद्यानां ग्रन्थाः। वेदानां पठनं पाठनं च तथा श्रवणं श्रावणं च सर्वेषामार्याणां परमो धर्मः।'' परन्तु तत्र ज्ञानपूर्वकपाठस्यैव प्रशंसा भवति निन्दा च अज्ञानपूर्वकस्य। तद्यथा ''स्थाणुरयं भारहारः किलाभूद् अधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा।'' वेदं पठित्वापि यदि कश्चिद् अर्थज्ञानायासमर्थस्तत्र भारवहनवन्न विशेषफलप्रदः। तद्विपरीतं यो वेदानामर्थमपि जानाति स ऐहलौकिकं पारलौकिकं च सुखमाप्नोति। वेदानामर्थस्य सुबोधाय सुष्ठुतया परिज्ञानाय सारल्येनावगमनार्थं परमकारुणिकैर्ऋषिभिर्वेदव्याख्यानग्रन्थाः, वेदाङ्गानि, उपाङ्गानि चोपदिष्टानि। येषु ग्रन्थेषु वेदानां प्रामाण्यं स्वीक्रियते ते ग्रन्थाः वैदिकवाङ्मयेषु गण्यन्ते।

सृष्टौ बह्व्यो विद्याः वर्तन्ते। एकैकं विषयमधिकृत्य स्वस्वग्रन्थेषु साक्षात्कृतधर्माण ऋषयो व्याख्यान्ति। शास्त्रान्तरे दृश्यस्य जगतश्चतुर्विभागः क्रियते। तद्यथा ''विशेष+ अविशेष+लिङ्गमात्र+अलिङ्गानि गुणपर्वाणि''। तत्र कथितान् ''विशेषान्'' अधिकृत्य कृतः ग्रन्थः वैशेषिकं दर्शनम्। विशेष इति महाभूतानि, परमाणवः। अद्यत्वेऽपि वैशेषिक-दर्शनस्य प्रणेता महर्षिः कणादः पदार्थविज्ञानस्य जनकः कथ्यते। अलभ्यमानेतिहासे-ऽणुपरमाणूनां विवेचकेषु महर्षिः कणादः सर्वप्रथमः इति प्रसिद्धः। दर्शनान्तरवदिदं वैशेषिकं दर्शनम् अपि अस्तिकदर्शनम्। दर्शनेऽस्मिन् मुक्तकण्ठेन वेदस्य प्रामाणिकता स्वर्यते—''तद्वचनाद् आम्नायस्य प्रामाण्यम्'' द्विधेदं सूत्रमुपलक्ष्यते (वै०द० १.१.३ तथा १०.२.९)।

वैदिकसिद्धान्तेषु पारङ्गतो व्याकरणादिशास्त्रेषु निष्णातः स्वामी ब्रह्ममुनिः परिव्राजको विद्यामार्तण्डः आर्यसमाजस्य विद्वद्वर्येष्वन्यतमः। तत्र भवता वेदनिरुक्त-दर्शनादिशास्त्राणां सौखदं भाष्यं कृतमस्ति। तयैव शृंखलयास्य वैशेषिकदर्शनस्य भाष्यं नातिविस्तरेण सारल्येन रचितम् एतदर्थं वेदवेदाङ्गेषु कृतभूरिपरिश्रमः स्वामी ब्रह्ममुनिमहाभागो धन्यवादार्हः।

बहुभ्यो वर्षेभ्यः स्वामिब्रह्ममुनिकृतस्य वैशेषिकदर्शनभाष्यपुस्तकस्यानुपलब्धिर्दरी-दृश्यते। अध्येतृभ्योऽस्य पुस्तकस्य महतीमावश्यकताम् अनुभूय वानप्रस्थसाधकाश्रमतः प्रकाशनस्य विचारः संजातः। अत्र वानप्रस्थसाधकाश्रमे बहुकालेभ्यो वेदाङ्गानां व्याकरणादि-शास्त्राणाम् उपाङ्गानां दर्शनशास्त्राणाम् अविच्छिन्नेन पठनं पाठनं च प्रचलति। तत्राध्येतारः पुस्तकमिदं लब्ध्वा वैशेषिकसूत्राणां रहस्यम् अवगन्तुं शक्ष्यन्तीति शुभाशंसा।

ग्रन्थसम्पादनेऽस्मिन् महत्परिश्रमं कृतवन्तः स्वामी मुक्तानन्द परिव्राजकाः, आचार्य शक्तिनन्दनः, ब्र० रमणः, ब्र० शिवनाथः सर्वेऽपि अत्यन्तं धन्यवादार्हाः।

**—आचार्यः सत्यजित्**

दिनाङ्क : ०१.०६.२०२१ — प्रबन्धको न्यासी, वानप्रस्थ-साधक-आश्रमः

तदनुसार- वैशाख कृष्ण ०७, २०७८ वि० संवत्

# प्रमुखविषयाणां सूत्रसूचिः

## परमात्मा

विभवान्महानाकाशस्तथा चात्मा ॥ ७.१.२२ ॥
संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥ २.१.१८ ॥

## जीवात्मा

'आत्मा' तदभवात् [अणुः] ॥ ७.१.२३ ॥
इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः ॥ ३.१.२ ॥
आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत् ॥ ३.१.१८ ॥
प्रवृत्तिनिवृत्ती च प्रत्यगात्मनि दृष्टे परत्र लिङ्गम् ॥ ३.१.१९ ॥
प्राणापाननिमेषोन्मेषजीवनमनोगतीन्द्रियान्तरविकाराः
सुखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानि ॥ ३.२.४ ॥
व्यवस्थातो नाना ॥ ३.२.२० ॥ शास्त्रसामर्थ्याच्च ॥ ३.२.२१ ॥
तत्रात्मा मनश्चाप्रत्यक्षे ॥ ८.१.२ ॥

## प्रकृतिः

सदकारणवन्नित्यम् ॥ ४.१.१ ॥ तस्य कार्यं लिङ्गम् ॥ ४.१.२ ॥

## मोक्षः

धर्मविशेषः....तत्त्वज्ञानान्निश्रेयसम् ॥ १.१.४ ॥
आत्मकर्मसु मोक्षो व्याख्यातः ॥ ६.२.१६ ॥

## मनः

आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्यभावोऽभावश्च मनसो लिङ्गम् ॥ ३.२.१ ॥ प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम् ॥ ३.२.३ ॥ तत्रात्मा मनश्चाप्रत्यक्षे ॥ ८.१.२ ॥

## इन्द्रियम्

भूयस्त्वाद् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः ॥ ८.२.५ ॥
तथापस्तेजो वायुश्च रसरूपस्पर्शाविशेषात् ॥ ८.२.६ ॥

## शरीरम्

प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते ॥ ४.२.२ ॥
गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम् ॥ ४.२.३ ॥
तत्र शरीरं द्विविधं योनिजमयोनिजं च ॥ ४.२.५ ॥

## धर्मः

यतोऽभ्युदयनिश्रेःयससिद्धिः स धर्मः ॥ १.१.२ ॥
धर्मविशेषप्रसूतात्...तत्त्वज्ञानात् निःश्रेयसम् ॥ १.१.४ ॥

## वेदः

तद्वचनादाम्नायस्य प्रामाण्यम् ॥ १.१.३ ॥
बुद्धिपूर्वा वाक्यकृतिर्वेदे ॥ ६.१.१ ॥
संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥ २.१.१८ ॥

## आत्मप्रत्यक्षं ज्ञानम्

आत्मन्यात्ममनसोः संयोगविशेषादात्मप्रत्यक्षम् ॥ ९.१.११ ॥

तथा द्रव्यान्तरेषु प्रत्यक्षम् ॥ ९.१.१२ ॥ असमाहितान्तकरणा उपसंहृतसमाधयस्तेषाञ्च ॥ ९.१.१३ ॥ तत्समवायात् कर्मगुणेषु ॥ ९.१.१४ ॥ आत्मसमवायादात्मगुणेषु ॥ ९.१.१५ ॥ ऐन्द्रियिकप्रत्यक्षं ज्ञानम् महत्यनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिः ॥ ४.१.६ ॥ अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः ॥ ४.१.८ ॥

## लैङ्गिकं ज्ञानम्

अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम् ॥ ९.२.१ ॥ अस्येदं कार्यकारणसम्बन्धश्चावयवाद् भवति ॥ ९.२.२ ॥

## शाब्दं ज्ञानम्

एतेन शाब्दं व्याख्यातम् ॥ ९.२.३ ॥
हेतुरपदेशो लिङ्गं प्रमाणं करणमित्यनर्थान्तरम् ॥ ९.२.४ ॥
अस्येदमिति बुद्ध्यपेक्षितत्वात् ॥ ९.२.५ ॥

## स्मार्त्तं ज्ञानम्

आत्मनसोः संयोगविशेषात् संस्काराच्च स्मृतिः ॥ ९.२.६ ॥

## स्वाप्नं ज्ञानम्

तथा स्वप्नः ॥ ९.२.७ ॥

## सौषुप्तं ज्ञानम्

स्वाप्नान्तिकम् ॥ ९.२.८ ॥ धर्माच्च ॥ ९.२.९ ॥

## आर्षं सिद्धज्ञानम्

आर्षं सिद्धदर्शनं च धर्मेभ्यः ॥ ९.२.१३ ॥

## विपरीतज्ञानम्

इन्द्रियदोषात् संस्कारदोषाच्चाविद्या ॥ ९.२.१० ॥
तद्दुष्टज्ञानम् ॥ ९.२.११ ॥

## द्रव्याणि

पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मन इति द्रव्याणि ॥ १.१.५ ॥

## द्रव्यलक्षणम्

क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम् ॥ १.१.१५ ॥

## गुणाः

रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः ॥ १.१.६ ॥

## गुणलक्षणम्

द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष
इति गुणलक्षणम् ॥ १.१.१६ ॥

## कर्माणि

उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥ १.१.७ ॥

## कर्मलक्षणम्

एकद्रव्यगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम् ॥ १.१.१७ ॥

## सामान्यं सामान्यलक्षणं वा

सामान्यं विशेष इति बुद्ध्यपेक्षम् ॥ १.२.३ ॥
भावोऽनुवृत्तेरेव हेतुत्वात् सामान्यमेव ॥ १.२.४ ॥
सदिति यतो द्रव्यगुणकर्मसु सा सत्ता ॥ १.२.७ ॥

द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च॥ १.२.५॥
अन्यत्रान्तेभ्यो विशेषेभ्यः॥ १.२.६॥

## विशेषो विशेषलक्षणम्

सामान्यं विशेष इति बुद्ध्यपेक्षम्॥ १.२.३॥ [अर्थात्—व्यावृत्तेरेव हेतुत्वाद् विशेषा एवान्त्यविशेषाः]॥ १.२.४, ६॥

## समवायः समवायलक्षणं वा

इहेदमिति यतः कार्यकारणयोः स समवायः॥ ७.२.२६॥

## अर्थपदवाच्यानि द्रव्यगुणकर्माणि

अर्थ इति द्रव्यगुणकर्मसु॥ ८.२.३॥
**पदार्थपदवाच्या द्रव्यगुणकर्मसामान्यविशेषसमवायाः......**
**....द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां**...॥ १.१.४॥

## समवायि कारणं द्रव्यमेव

कारणमिति द्रव्ये कार्यसमवायात्॥ १०.२.१॥
दिक्कालाकाशा न समवायिकारणं कर्मणाम्
निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः॥ ५.२.२३॥

## असमवायिकारणम्

संयोगाद्वा॥ १०.२.२॥ (द्रव्यम्) कारणं त्वसमवायिनो गुणाः॥ ५.२.२४॥ (गुणाः) तथा रूपे कारणैकार्थसमवायात्॥ १०.२.४॥ (ऐकभौतिको गुणः) कारणसमवायात् संयोगः पटस्य॥ १०.२.५॥ (गुणोऽनेकद्रव्यस्थः) कारणकारणसमवायाच्च॥ १०.२.६॥ (अनेकानेकद्रव्यस्थो गुणः) कारणे समवायात् कर्माणि॥ १०.२.३॥ (कर्म) समवाय्यसमवायिनोर्विशिष्टम्।

## कारणम् (निमित्तकारणम्)

संयुक्तसमवायादग्नेर्वैशेषिकम्॥ १०.२.७॥ [जडेषु निमित्तकारणमग्निराग्नेयगुण औष्ण्यं पाकजपरिणामकारित्वात्। जडभिन्नं चेतनं चेतन-गुणाश्च ज्ञानप्रयत्नादयो निमित्तकारणमित्यर्थापत्तेरागतम्] कारणेन कालः॥ ५.२.२६॥ (उत्पादफलपाकादिपरिणामकारित्वात् कालोऽपि निमित्तकारणं जडं सत्) आकाशश्च निष्क्रमणप्रवेशनयोर्निमित्तम्।

## द्रव्यं कार्यम्

द्रव्याणि द्रव्यान्तरमारभन्ते... ॥ १.१.१० ॥ द्रव्याणां द्रव्यं कार्यं सामान्यम् ॥ १.१.२३ ॥ [द्रव्यं कार्यं तत्समववायिकारणानि कारणद्रव्याणि] संयोगानां द्रव्यम् ॥ १.१.२७ ॥ (द्रव्यं कार्यं तदसमवायिकारणं संयोगः)

## गुणः कार्यम्

गुणाश्च गुणान्तरं 'आरभन्ते'॥ १.१.१० ॥ (कारणस्थगुणा असमवायिकारणम्) रूपाणां रूपम् ॥ १.१.२८ ॥ द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम् ॥ १.१.१८ ॥ [गुणः कार्यं तस्य द्रव्यं समवायिकारणं द्रव्यभिन्नं निमित्तकारणम्] द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च ॥ १.१.२५ ॥ (कार्याणि, तेषां द्रवयाणि समवायिकारणम्) संयोगविभागाश्च कर्मणाम् ॥ १.१.३० ॥ संयोगविभागवेगानां कर्म समानम् ॥ १.१.२० ॥ संयोगविभागाः कार्यं तदसमवायिकारणं कर्म)

## कर्म कार्यम्

द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम् ॥ १.१.१८ ॥ (कर्म कार्यं तत्समवायिकारणं द्रव्यं तस्य निमित्तकारणमसमवायिकारणं यथायोग्य-मन्यत्) गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम् ॥ १.१.२९ ॥ (उत्क्षेपणं कार्यं संयोगादीनां गुरुत्वादयो यथायोग्यं निमित्तमसमवायि वा)

# विषयसूचिः

## अस्य ग्रन्थस्य प्रतिपाद्यविषयनिष्कर्षः

द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यपदार्थषट्कविज्ञानस्य प्रसिद्ध-धर्मापेक्षया धर्मविशेषनामधेयत्व मोक्षसाधनत्वं तद्व्याख्यानस्य वेदाधारत्वं च। परमात्मनो वेदप्रवक्तृत्वं विभुत्वं जीवात्मनोऽणुत्वमुभयोरध्यात्मप्रत्यक्ष-त्वम्, जीवात्मनः शरीरेन्द्रियमनोभ्यो भिन्नवस्तुत्वम्। वेदस्य बुद्धिपूर्वकत्वाद् धर्मप्रवचनशास्त्रत्वादीश्वरोक्तत्वाच्च प्रामाण्यम्, प्रात्यक्षिकलैङ्गिकशाब्द-स्मार्तार्षाणि ज्ञानानि, मोक्षस्याध्यात्मकर्मसाध्यत्वम्। द्रव्यगुणकर्मणां यथायोग्यं पारस्परिकं कार्यकारणभावप्रदर्शनम्, असमवायिसमवायिनिमित्त कारणानां लक्षणं विवेचनं च॥

### अध्यायानां प्रमुखविषयसारः

**प्रथमाध्यायस्य—**

परमात्मपर्यन्तविशिष्टवस्तुविज्ञानस्य धर्मविशेषनामधेयत्वं तद्विवरणं च।

**द्वितीयाध्यायस्य—**

द्रव्याणां नैजिकौपाधिकगुणलक्षणपरीक्षणे शब्दस्य गुणत्वानित्यत्व-निर्णयः।

**तृतीयाध्यायस्य—**

आत्मनः शरीरादिभ्यो भिन्नवस्तुत्वसिद्धिर्मनसश्च ज्ञानोपकरणत्व-प्रदर्शनम्।

**चतुर्थाध्यायस्य—**

सर्वोपादानस्याव्यक्तस्य स्वीकारः। शरीरस्यैकोपादानकत्वं योनिज-जत्वायोनिजत्वञ्च।

**पञ्चमाध्यायस्य—**

कर्मप्रवृत्तेः कारणविवेचनम्, कर्म प्रति समवाय्यसमवायिकारणविचारः।

**षष्ठाध्यायस्य—**

वेदस्य बुद्धिपूर्वकत्वम्, कर्मणः फलप्राप्तिविचारः, मोक्षस्योपायोऽ-ध्यात्मकर्माणि।

**सप्तमाध्यायस्य—**

परमात्मनो विभुत्वं, जीवात्मनश्चाणुत्वम्, शब्दार्थयोः सामयिकसम्बन्ध प्रतिपादनम्।

**अष्टमाध्यायस्य—**

आत्मनोऽनैन्द्रियिकप्रत्यक्षत्वम्, पृथक्पृथगिन्द्रियाणां पृथक्पृथगेको-पादानकत्वम्।

**नवमाध्यायस्य—**

प्रागभावादीनामभावानां प्रतिपादनम्, प्रात्यक्षिकलैङ्गिकादिज्ञानानां विवरणञ्च।

**दशमाध्यायस्य—**

सुखदुःखज्ञानानामात्मगुणानां भिन्नभिन्नत्वम, समवाय्यसमवायि-निमित्तकारणानां विवेचनम्।

## आह्निकानां विषयाः

**प्रथमाध्याये—**

प्रथमाह्निकस्य—धर्मव्याख्यानप्रतिज्ञा, धर्मप्रयोजनञ्च। प्रसिद्धधर्मा-पेक्षया विशिष्टधर्मस्य तत्त्वज्ञानस्याङ्गीकारस्तत्स्वरूपं तदर्थं वेदप्रामाण्यञ्च। द्रव्यगुणकर्मसामान्यविशेषसमवायानामुद्देशलक्षणसहितानां द्रव्यगुणकर्मणां पारस्परिककार्यकारणभावप्रकारः।

द्वितीयाह्निकस्य—सामान्यविशेषयोर्लक्षणम्, परसामान्यं सत्ता तस्याः सर्वत्रानुवृत्तिधर्मत्वम्, द्रव्यत्वं गुणत्वं कर्मत्वं चापरसामान्यं तस्य तस्य यथाक्रमं द्रव्येषु गुणेषु कर्मस्वनुवर्तमानत्वम्। विशेषस्य व्यावृत्तिधर्मत्वम्।

**द्वितीयाध्याये—**

प्रथमाह्निकस्य—द्रव्येषु पृथिव्यप्तेजोवाय्वाकाशानां स्वरूपम्। वाय्वा-काशलक्षणस्य परीक्षणं च।

द्वितीयाह्निकस्य—पृथिव्यादीनां नैजिकलक्षणनिरूपणम्, कालदिशो-र्लक्षणपरीक्षणे शब्दो द्रव्यं गुणःकर्म वेति संशयस्तस्य संशयस्य लक्षणं पुनः शब्दस्य परीक्षणं तस्य गुणत्वानित्यत्वयोर्निर्णयश्च।

**तृतीयाध्याये—**

प्रथमाह्निकस्य—शरीरेन्द्रियमनोभ्यः साधनेभ्यो भिन्नस्य तत्प्रयोक्तुस्त-त्साध्यविषयभोक्तुर्ज्ञानगुणवत आत्मनः सिद्धिस्तत्सिद्धये हेतुप्रदर्शनं च।

द्वितीयाह्निकस्य—मनसः सिद्धिस्तस्यैकत्वञ्च। शरीरे जीवात्मनो बोधकानि विशिष्टलिङ्गानि प्राणादयः, तस्याहमिति शब्देनान्तरिकप्रत्यक्षत्वं, प्रतिशरीरं नानानुभूत्या खल्वात्मनोऽसंख्यत्वम्।

**चतुर्थाध्याये—**

प्रथमाह्निकस्य—सर्वोपादानस्याव्यक्तस्य नित्यत्वम्, रूपवद्वस्तुनः प्रत्यक्षत्वे कारणपरिग्रहः।

द्वितीयाह्निकस्य—पृथिव्यादीनां कार्यत्रैविध्यम्। शरीरस्यैकोपादानकत्वं योनिजत्वमयोनिजत्वं च। अयोनिजत्वस्य कारणप्रदर्शनम्।

**पञ्चमाध्याये—**

प्रथमाह्निकस्य—भिन्नभिन्नवस्तुषु वर्तमानस्य विविधकर्मणः प्रवृत्तेः कारणानि।

द्वितीयाह्निकस्य—पूर्ववत् कर्मणः प्रवृत्तेः कारणानि तथा चेतनस्यात्मनः कर्मकारणानि च कर्म प्रति निष्क्रियाणां द्रव्याणां तथा गुणानां चासमवायिकारणत्वम्, गुणानां गुणं प्रति द्रव्यं प्रत्यप्यसमवायिकारणत्वम्, कर्म प्रति दिशोऽसमवायि कारणत्वम्, कालस्य कर्मप्रति निमित्तकारणत्वम्।

**षष्ठाध्याये—**

प्रथमाह्निकस्य—वेदस्य बुद्धिपूर्वकत्वात् प्रामाण्यप्रदर्शनम्, स्वकृतस्य पुण्यपापकर्मणः फलभागी स्वयं नान्यः, दुष्टादुष्टभोजनविचारः। भोक्तव्यविषये पात्रापात्रनिर्णयश्च।

द्वितीयाह्निकस्य—अदृष्टफलप्रयोजकानि कर्माणि, शुचिव्रतानां यमनियमानामाचरणीयत्वम्, रागप्रवृत्तेः कारणानि, आत्मकर्मणां योगाभ्यासानां मोक्षसाधनत्वम्।

**सप्तमाध्याये—**

प्रथमाह्निकस्य—रूपादिगुणानां नित्यत्वानित्यत्वे, परमात्मनो महत्परिमाणवत्त्वं जीवात्मनो मनसश्चाणुपरिमाणवत्वम्, दिक्कालाकाशानां महत्परिमाणवत्म्।

द्वितीयाह्निकस्य—द्रव्यस्थस्य एकत्वसंख्यागुणस्यान्यगुणेभ्यो भिन्नवस्तुत्वं रूपादिभ्यो गुणेभ्य सङ्ख्याया गुणकर्मणोरवर्तमानत्वं द्रव्यवर्तित्वं, गुणेषु गुणाभावस्य कर्मसु कर्माभावस्य प्रदर्शनम्, संयोगविभागयोः स्वकारणकार्ययोरवर्तमात्वम्, शब्दार्थयोः समवायसम्बन्धस्य संयोगसम्बन्धस्य चास्वीकारस्तथा सामयिकसम्बन्धस्य संस्थापनम्, समवायसम्बन्धस्य

लक्षणम्।

**अष्टमाध्याये—**

प्रथमाह्निकस्य—आत्मनो मनसश्चैन्द्रियकप्रत्यक्षत्वाभावः। गुणज्ञानेन गुणिनस्तत्समवायिनो द्रव्यस्य ज्ञानम्, कार्यकारणभावरहितेषु द्रव्येषु परस्परानापेक्षिकं ज्ञानम्।

द्वितीयाह्निकस्य—साङ्केतिकज्ञानस्य बुद्ध्यपेक्षत्वम्, द्रव्यगुणकर्मणामर्थपदवाच्यत्वम्, कार्यद्रव्याणामेकोपादानकत्वम्, नासिकादिष्विन्द्रयेषु पृथिव्यादीनामेकोपादनकत्वम्।

**नवमाध्याये—**

प्रथमाह्निकस्य—प्रागभावप्रध्वंसाभावान्योन्याभावात्यन्ताभावसंसर्गाभावानां विवेचनम्, आत्मप्रत्यक्षस्य (अध्यात्मप्रत्यक्षस्य) योगसमाधिजस्य लक्षणम्।

द्वितीयाह्निकस्य—आनुमानिकशाब्दस्मार्त्तस्वाप्नसौषुप्तार्षाणां ज्ञानानां वर्णनं विपरीतज्ञानस्य च प्रतिपादनम्।

**दशमाध्याये—**

प्रथमाह्निकस्य—सुखदुःखयोर्भेदः, सुखदुःखयोर्ज्ञानाद् भिन्नत्वम्, सुखदुःखयो निष्पत्तिकारणं प्रत्यक्षानुमाने।

द्वितीयाह्निकस्य—कार्यसमवेतं द्रव्यं समसायिकारणम्, संयोगात् कार्यहेतु द्रव्यसमवायिकारणम् कारणैकार्थसमवेतत्वाद्, गुणोऽसमवायि-कारणम्, कारणसमवेतत्वादसमवायिकारणं संयोगः कार्यस्य, अग्निस्तद्गुणश्चौष्ण्यं विशिष्टकारणं समवाय्यसमवायिभ्यां भिन्नं तन्त्रान्तरप्रसिद्धं निमित्तकारणम्[१]।

---

१. प्रशस्तपादभाष्ये तु प्रयुज्यते निमित्तकारणशब्दो वैशेषिकदर्शने नोपलभ्यते।

# अन्यकृतभाष्यालोचनान्वितानि सूत्राणि

**प्रथमाध्यायस्य—**

यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥ १.१.२ ॥

उभयथा गुणाः ॥ १.१.१३ ॥

व्यतिरेकात् ॥ १.१.२२ ॥

गुणवैधर्म्यान्न कर्मणां कर्म ॥ १.१.२४ ॥

सदिति लिङ्गाविशेषाद् विशेषाभावाच्चैको भावः ॥ १.२.१७ ॥

**द्वितीयाध्यायस्य—**

अद्रव्यवत्त्वेन द्रव्यम् ॥ २.१.११ ॥

तस्मादागमिकम् ॥ २.१.१७ ॥

संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम् ॥ २.१.१८ ॥

प्रत्यक्षप्रवृत्तत्वात् संज्ञाकर्मणः ॥ २.१.१९ ॥

संयोगादभावः कर्मणः ॥ २.१.२३ ॥

कार्यान्तराप्रादुर्भावाच्च शब्दः स्पर्शवतामगुणः ॥ २.१.२५ ॥

परिशेषाल्लिङ्गमाकाशस्य ॥ २.१.२७ ॥

पुष्पवस्त्रयोः सति सन्निकर्षे गुणान्तराप्रादुर्भावो
वस्त्रे गन्धाभावलिङ्गम् ॥ २.२.१ ॥

अपरस्मिन् परं युगपच्चिरं क्षिप्रमिति काललिङ्गानि ॥ २.२.६ ॥

नित्येष्वभावादनित्येषु भावात् कारणे कालाख्येति ॥ २.२.९ ॥

तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वात् ॥ २.२.२२ ॥

**तृतीयाध्यायस्य—**

अन्यदेव हेतुरित्यनपदेशः ॥ ३.१.७ ॥

अहमिति शब्दस्य व्यतिरेकान्नागमिकम् ॥ ३.२.९ ॥

न तु शरीरविशेषाद् यज्ञदत्तविष्णुमित्रयोर्ज्ञानं विषयः ॥ ३.२.१७ ॥

**चतुर्थाध्यायस्य—**

अनित्य इति विशेषतः प्रतिषेधभावः ॥ ४.१.४ ॥

अविद्या ॥ ४.१.५ ॥

सत्यपि द्रव्यत्वे महत्वे रूपसंस्काराभावाद् वायोरनुपलब्धिः ॥ ४.१.७ ॥

एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम्॥ ४.१.१३॥

**पञ्चमाध्यायस्य—**

नोदनाभिघातात् संयुक्तसंयोगाच्च पृथिव्यां कर्म॥ ५.२.१॥

तद्विशेषेणादृष्टकारितम्॥ ५.२.२॥

नोदनापीडनात् संयुक्तसंयोगाच्च॥ ५.२.६॥

**सप्तमाध्यायस्य—**

नित्यं परिमण्डलम्॥ ७.१.२०॥

अविद्या च विद्यालिङ्गम्॥ ७.१.२१॥

विभवान्महानाकाशस्तथा चात्मा॥ ७.१.२२॥

निःसंख्यत्वात् कर्मगुणानां सर्वैकत्वं न विद्यते॥ ७.२.४॥

भ्रान्तं तत्॥ ७.२.५॥

एकत्वाभावाद् भक्तिस्तु न विद्यते॥ ७.२.६॥

कार्यकारणयोरेकत्वैकपृथक्त्वाभावादेकत्वैकपृथक्त्वं न विद्यते॥ ७.२.७॥

एतदनित्ययो र्व्याख्यातम्॥ ७.२.८॥

युतसिद्ध्यभावात् कार्यकारणयोः संयोगविभागौ न विद्येते॥ ७.२.१३॥

गुणत्वात्॥ ७.२.१४॥

**अष्टमाध्यायस्य—**

सामान्यविशेषेषु सामान्य०॥ ८.१.५॥

गुणकर्मसु गुणकर्माभावाद् गुणकर्मापेक्षं न विद्यते॥ ८.१.८॥

**नवमाध्यायस्य—**

असमाहितान्तःकरणा उपसंहृतसमाधयस्तेषां च॥ ९.१.१३॥

तत्समवायात् कर्मगुणेषु॥ ९.१.१४॥

आत्मसमवायादात्मगुणेषु॥ ९.१.१५॥

अस्येदं कार्यकारणसम्बन्धश्चावयवाद् भवति॥ ९.२.२॥

**दशमाध्यायस्य—**

संशयनिर्णयान्तराभावश्च ज्ञानान्तरत्वे हेतुः॥ १०.१.२॥

अभूदित्यपि॥ १०.१.४॥

संयुक्तसमवायादग्नेर्वैशेषिकम्॥ १०.२.७॥

# प्राक्कथनम्

केचिद् भाष्यकाराः ''न वयं षट्पदार्थादिवादिनो वैशेषिकादिवत्'' (सांख्य० १.२५) इति पदार्थविषये ''महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्'' (वेदान्त० २.२.११) इति परिमाणविषये ''कर्मैके तत्र दर्शनात्'' (मीमांसा० १.१.६६) इति शब्दानित्यत्वविषये, एवं सांख्यवेदान्तमीमांसादर्शनेषु वैशेषिकदर्शनस्थवादानां निर्देशनात् तद्दर्शनेभ्यः प्राक्तनत्वं वैशेषिकदर्शनस्य मन्यन्ते। मन्येरन् ते तथादृष्ट्या, अयं वादो वा विवादो वा तु खल्वैतिहासिकेषु तिष्ठतु। परन्तु वैशेषिकादीनि नामानि दर्शनविद्यानामानि यौगिकानि। दर्शनानि तु वेदानामुपाङ्गानि वैदिककालादेव मनीषिणां विचारविषयाः। अङ्गान्युपाङ्गानि चाङ्गिभिर्वेदैः सह संसक्तानि यद्वा तेभ्योऽङ्गिभ्यो वेदेभ्यः प्रकटीभूतानि सन्ति। एवं सर्वाण्यपि दर्शनानि समानकालानि तत्र पौर्वापर्यं न युक्तम्, ''वेदान्त-विज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः'' (मुण्डको० ३.२.६) वेदान्तनाम्नीं योगनाम्नीं विद्यामधिकृत्य खलु वर्णनमिदमुपनिषदि युज्यते यतो वेदान्त-दर्शनग्रन्थे तूपनिषदो व्याख्यायन्ते प्रमाणीक्रियन्ते च। तथा ''सांख्यं योगं समभ्यस्येत्'' (निरु० १४.६) गर्भे सांख्ययोगयोरवलम्बनं विद्यादृष्ट्या न तु ग्रन्थरूपेण सङ्गच्छते। तत्र ग्रन्थेषु तु यथायोग्यं स्वक्षेत्रानुसारिणा विचारप्रदर्शनेनैव भवितव्यं न हि तत्रान्यविद्यावादस्य खण्डनमपेक्षितम्, अपितु तत्र भिन्नक्षेत्रस्यानुवादमात्रतया प्रतिपादनं यत्तत्र क्षेत्रे त्वित्थमस्मदीय-क्षेत्रे खल्विदमिति मतिरस्माकं सर्वदर्शनेषु॥

वैशेषिकदर्शनस्य भाष्यं रावणेनापि व्यधायीति रत्नप्रभादौ प्रचर्चितं तच्च काणादस्य वैशेषिकस्य यद्वाऽन्यकृतस्य प्राक्तनस्य वैशेषिकस्येति न ज्ञायते तस्यानुपलब्धत्वात्। साम्प्रतं प्रशस्तपादभाष्यमुपलभ्यते यच्च पुरातनत्व-पदमधितिष्ठति विदुषां मतौ। स्वामिदयानन्देन तु सत्यार्थप्रकाशे घोषितं वैशेषिकस्य भाष्यं गौतमेन मुनिना कृतमति। ऋग्वेदादिभाष्यभूमिकायां तु प्रशस्तपादकृतभाष्यसहितं कणादमुनिकृतं वैशेषिकशास्त्रमिति सूचितम्। प्रशस्तपादभाष्यं हि गौतममुनिकृतमिति प्रसिद्धिः। भवतु तथा, परन्तु तत्र प्रारम्भिकं मङ्गलाचरणम् ''प्रणम्य हेतुमीश्वरं मुनिकणादमन्वतः'' एतन्ना-स्मभ्यं रोचते, न ह्येतादृशः खल्वृषीणां शिष्टाचारः क्वचिदन्यत्र दृष्टः, ईश्वरं

नमस्कृत्य मुनयेऽपि तद्वन्नमस्कारो नमस्कर्तुरमुनित्वं द्योतयति। तथापि भवतु तत्प्रशस्तपादभाष्यं पुरातनं यद्वा प्रामाणिककल्पं तथापि न हि तत् सूत्रक्रममनुसरद् यद्वा न प्रत्येकसूत्रावलम्बनपरं भाष्यं तत्तु स्वतन्त्रं व्याख्यानरूपमस्ति।

अस्य दर्शनस्य भारद्वाजीया वृत्तिरप्यासीदिति शङ्करमिश्रेण निजोपस्कार-वृत्तौ ''वृत्तिकृतस्तु'' इति वचनेन स्थाने-स्थाने सङ्केतितम्। अस्तीदं मोक्षशास्त्रं तत्र यथा वेदोपनिषद आगमशास्त्रं श्रवणशास्त्रं योगदर्शनं तु ध्यानाभ्यासरस-शास्त्रं निदिध्यासनशास्त्रं पुनर्वैशेषिकदर्शनं तु खल्वनुमानशास्त्रं मननशास्त्रम्। त्रयाणामुपयुक्तिः प्रदर्शिता च परमात्मसङ्गे। ''आगमेनानुमानेन ध्यानाभ्यास-रसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्॥'' (योग० १.४८ व्यासः) अभ्युदयपूर्वकतया खल्वस्य मोक्षशास्त्रत्वं तस्मादत्र पूर्वमभ्युदयः साध्यः पश्चान्मोक्षः, यतो हि मानवस्य प्रयोजनद्वयम्—अभ्युदयो निःश्रेयसश्च तत्र प्रयोजनद्वये धर्मार्थकाममोक्षाश्चत्वारः पदार्थाः। अर्थकामौ त्वभ्युदयस्तस्य मूलं धर्मः, पुनरभ्युदयानन्तरं निःश्रेयसं मोक्षसिद्धिरिति युक्तम्।

पृथिव्यादिपरमात्मपर्यन्तवस्तूनां विज्ञानमत्र धर्मविशेषः स च मनुस्मृ-त्यादिधर्मशास्त्रप्रतिपादितवर्णाश्रमधर्मतो मीमांसाशास्त्रविहितकर्मकाण्डा-ख्यधर्मतश्च विशिष्टो धर्मोऽस्य शास्त्रस्य लक्ष्यं तस्मात्तद्व्याख्यानकरणमा-चार्यस्य प्रतिज्ञा तत्परिबृंहणार्थः खल्वेष सन्दर्भः।

षण्णां दर्शनानां युगलत्रयं तत्र सांख्योगयोरेकं मीमांसावेदान्तयोर्द्वितीयं, वैशेषिकन्यायोस्तृतीयमिति, तत्र च प्रत्येकस्मिन् युगले पूर्वं पूर्वं दर्शनमनीश्वर-वादपरमिति धारणा खल्वाधुनिकानां भाष्यकृतामध्येतॄणां च, परन्तु सा न सत्या। सांख्यमीमांसयोर्विषये तु सांख्यदर्शनभाष्ये तथा दार्शनिकाध्यात्म-तत्त्वे ग्रन्थेऽहं विस्तरशः प्रतिप्रादितवान्, वैशेषिकदर्शनविषयेऽत्रोच्यते—

वैशेषिकदर्शनस्य न्यायदर्शनेन साकं समानतन्त्रत्वात् तत्रापि खल्वी-श्वरस्य स्वीकारेण भवितव्यमेव। न्यायदर्शने खल्वीश्वरः स्वीक्रियते ''ईश्वरः कारणं तत्कारितत्वादहेतुः'' (न्याय० ४.१.१९-२१) कर्मफलं कर्मानुरूप-मीश्वरः प्रयच्छतीत्याशयः। स च पृथिव्यादिभूतानां प्रवर्तकः—इति वात्स्यायनः। तत्र वैशेषिकदर्शनेऽपीश्वरः सूत्रनिर्देश्योऽस्ति ''विभवा-न्महानाकाशस्तथा चात्मा'' (७.१.२२) ''संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्'' (२.१.१८) अत्र सूत्रयोर्निर्दिष्टमस्ति खल्वाकाश इव विभुर्महान् आत्मा-परमात्मा तथा चागमानामस्मद्विशिष्टानां मानवविशिष्टानामपौरुषेयाणां वचनानां

प्रामाण्यमिति कथनादीश्वरसिद्धिर्भवति तत्स्पष्टीकरणं तु सूत्रभाष्ये द्रष्टव्यम्। प्रशस्तपादभाष्येत्वीश्वरोऽनेकत्र स्थलेषु स्वीकृत एव तद्यथा—

प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः। (प्रशस्तपादः)

तच्चेश्वरचोदनाभिव्यक्ताद् धर्मादेव। (प्रशस्तपादः)

महेश्वरेच्छात्मगुणसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यः। (प्रशस्तपादः)

तत्पुनः प्राणिनां भोगभूतये महेश्वरसिसृक्षानन्तरम्। (प्रशस्तपादः)

उपलभ्यमानेषु वैशेषिकभाष्येषु प्रधानं प्रशस्तपादभाष्यं तत्रेश्वरस्य स्वीकारः स्पष्ट एव। अतो न वैशेषिकदर्शनमनीश्वरवादपरम्।

अत्र वैशेषिकदर्शने यद्यपि समवाय्यसमवायिनिमित्तभेदात् कारणत्रयं स्वीक्रियते परन्तु निमित्तनाम्ना निमित्तकारणं नोच्यते किन्तु समवाय्यसमवायिभ्यां भिन्नं कारणं वैशेषिकनाम्ना ह्युच्यते, अग्नेर्वैशेषिकम्... (१०.२.७) तदेव तन्त्रान्तरसामचारान्निमित्तकारणनामभागिति मतं भाष्यकाराणाम्। प्रशस्तपादभाष्यते तु निमित्तकारणं स्पष्टमुपलभ्यते। तदत्र कारणविषये विवरणतालिका दीयते—

## कारणप्रक्रियया

**समवायिकारणम्**—क्रियागुणवत् पृथिव्यादि द्रव्यं समवायिकारणं द्रव्यगुणकर्मणाम्, निष्क्रियमाकाशादि द्रव्यं समवायिकारणं गुणानामेव। द्रव्याणि हि समवायिकारणानि न गुणा न कर्माणि।

**असमवायिकारणम्**—द्रव्यं [संयोगात्] असमवायिकारणं द्रव्यकर्मणाम् निष्क्रियं द्रव्यं द्रव्यगुणयोरसमवायिकारणं भवति न तु कर्मणः। गुणो भवत्यसमवायिकारणं द्रव्यगुणकर्मणाम्। कर्म (कारणसमवायात्, न तु साक्षात्) असमवायिकारणं द्रव्यगुणयोः।

**निमित्तकारणम्**—द्रव्यं (जडेषु)-कालोऽग्निश्च निमित्तकारणं परिणामकारित्वात्, आकाशश्च निष्क्रमणप्रवेशनयोर्निमित्तम्। चेतन आत्मा परमात्मा च निमित्तकारणं निजज्ञानादिगुणैः परिणमयितृत्वात्। गुणः—अग्नेरौष्ण्यं निमित्तकारणम्, आत्मनः परमत्मनश्च चेतनस्य ज्ञानादिगुणो निमित्तकारणम्। कर्म—चेतनकर्मप्रयत्नो निमित्तकारणं द्रव्यगुणयोः।

## वस्तुप्रक्रियया

**क्रियागुणवद् द्रव्यम्**—समवायिकारणं समवायात्। असमवायिकारणं

तु संयोगात्। निष्क्रयं द्रव्यं त्वसमवायिकारणम्। कालोऽग्निश्चेतन आत्मा परमात्मा च द्रव्यं। निमित्तकारणम्। आकाशोऽपि निष्क्रमणप्रवेशनयोः निमित्तम्।

गुणः—असमवायिकारणं गुणस्य कारणैकार्थसमवायात्, कर्मणश्चापि साधारण्यात्, द्रव्यस्यापि भवत्यसमवायिकारणं संयोगः कारणसमवायात्। निमित्तकारणं भवत्यग्नेर्गुण औष्ण्यं चेतनस्यात्मनः परमात्मनश्च ज्ञानादि गुणो द्रव्यगुणकर्मणाम्। संयोगविभागगुरुत्वद्रवत्ववेगाश्च निमित्तकारणं कदाचिद् भवन्ति (निमित्तान्तरमन्तरेण) इति प्रशस्तपादः।

कर्म—असमवायिकारणं द्रव्यस्य कारणसमवायात्, न तु साक्षाद् जडान्तर्वर्तिनः संयोगस्य तु साक्षादसमवायिकारणं निमित्तकारणं सर्वत्र प्रयत्नश्चेतनकर्म हि।

भाष्यप्रयोजनम्—

अस्मद्भाष्यस्य प्रयोजनं सरलया भाषया कठिनस्यापि सूत्रस्य पारस्परिकसूत्रसङ्गत्या सूत्रानुसारि विषयस्फुटीकरणमथान्यैः कृतानामन्यथा-र्थानां प्रतिवादनं च। इति बुद्धिमद्वर्येषु।

**स्वामी ब्रह्ममुनिः परिव्राजको विद्यामार्तण्डः**

**८.७.१९६२ ई०**

# वैशेषिकदर्शनं ब्रह्ममुनिभाष्योपतेम्

## प्रथमोऽध्यायः

### तत्र

## प्रथमाह्निकम्।

### अथातो धर्मं व्याख्यास्यामः ॥ १ ॥

(अथ) 'अथ' शब्दोऽधिकारार्थः, अधिकारः, प्रस्तावो विषयप्रारम्भः प्रारभ्यते खलु विषयः, सम्प्रति (अतः) हेतौ, मानवस्य प्रयोजनसिद्धिर्भवेदिति हेतोः (धर्मम्) तत्प्रयोजनसाधकं धर्मम् (व्याख्यास्यामः) निरूपयिष्यामः।

धर्मार्थकाममोक्षा इति पदार्थचतुष्टयं हि प्रयोजनं मानवस्य, तत्रार्थकामौ त्वभ्युदयः, मोक्षः खलु निःश्रेयसम्। तथाकृत्वा हि ''यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः'' इत्यनन्तरसूत्रम्। किमत्र मनुस्मृत्यादिधर्मशास्त्रेषु वर्णितो वर्णाश्रमधर्मो यद्वा ''अथातो धर्मजिज्ञासा'' इत्यधिकृत्य जैमिनीयमीमांसाशास्त्रे प्रदर्शितः कर्मकाण्डाख्यो धर्मो व्याख्यास्यते किंवाऽन्यतमः कश्चित्। इति जिज्ञासायामस्तीदं वैशेषिकं दर्शनम्, अत्र तु धर्मविशेषस्तद्भिन्न एव व्याख्यातुं युक्तः। उक्तं हि ''धर्मविशेषप्रसूतात्'' (४) ॥ १ ॥

स च धर्मः किंस्वरूपः किम्फलो वेत्युच्यते—

### यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ॥ २ ॥

(यतः) यस्मात् खलु यदनुष्ठानादिति यावत् (अभ्युदयनिःश्रेयससिद्धिः) अभ्युदयस्य-अभिमुखीभूतस्योदयस्य भाविन उत्कर्षस्य—इह परत्र च जन्मनि सांसारिकसुखैश्वर्यस्य[१] पुनश्च निःश्रेयसस्य नितान्तकल्याणस्य मोक्षस्य सिद्धिर्भवेत् (सः-धर्मः) स खलु धर्मो धर्मपदवाच्यः स चात्र व्याख्यातव्यः।

---

१. 'दृष्टादृष्टप्रयोजनानां दृष्टाभावे प्रयोजनमभ्युदयाय' (वै० ६.२.१) तस्मादभ्युदयोऽत्र प्रस्तुतसूत्रेऽभिमुखीभूतं सुखैश्वर्यं न तु शङ्करमिश्रजयनारायणकृतोऽर्थस्तत्त्वज्ञानं स्वर्गो वा सङ्गच्छते।

न केवलं सांसारिकसुखैश्वर्यं धर्मो न च मोक्षमार्गचिन्तनमात्रं धर्मः किन्तूभयसहभावो यद्वोभयसम्पत्तिर्धर्मः। तदत्र वैशिष्ट्यं यदभ्युदयरूपभूमिकोपरि निःश्रेयसमवतिष्ठतेऽथ च निःश्रेयसस्य छायायामभ्युदयः सम्प्रतिष्ठते। धर्ममाश्रित्यार्थकामौ साध्यौ तावेवाभ्युदयः प्रयोजनमेकम्, अपरञ्च धर्ममुपजीव्य निःश्रेयसं मोक्षः साध्यः, इति प्रयोजनं द्वितीयम्। एवं प्रयोजन-द्वयं साध्यं धर्मतः॥ २॥

किञ्च मनुस्मृत्यादिधर्मशास्त्रेषु प्रतिपादितस्य तथा पूर्वमीमांसायां वर्णितस्य धर्मस्य व्याख्यानमत्र लक्ष्यं नास्ति? पुनः किमन्यतमं धर्मं व्याख्यातुं निजाधिकारमथ च तथाकरणे स्वात्मानं प्रमाणीभूतं मन्यते भवान्? उच्यते नैवम्, किन्तु—

**तद्वचनादाम्नायस्य प्रामाण्यम्॥ ३॥**

(तद्वचनात्) 'तत्' शब्देन प्रकृतो धर्मशब्दो गृह्यते। तस्य धर्मस्य वचनं तद्वचनम्, उच्यतेऽस्मिन्निति वचनम्[1] प्रवचनशास्त्रं धर्मप्रवचनशास्त्रं तस्माद् धर्मप्रवचनशास्त्रत्वात् (आम्नायस्य प्रामाण्यम्) उक्तं हि मनुना "वेदोऽखिलो धर्ममूलम् (मनु० २.६) "धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः" (मनु० २.१३)।

अथवा—

मनुस्मृत्यादिधर्मशास्त्राण्यनुसृत्य यद्वा पूर्वमीमांसादर्शनं लक्ष्यीकृत्य धर्मव्याख्यानं न करोतु, तत्र भवतो धर्मव्याख्याने ततः किं वैशिष्ट्यमथ च किं लक्ष्यीकृत्य तद्व्याख्यानं क्रियते। अत्रोच्यते—

**तद्वचनादाम्नायस्य प्रामाण्यम्॥ ३॥**

(आम्नायस्य प्रामाण्यम्) मयाऽत्र व्याख्यातव्ये धर्मे वेदस्य प्रमाणत्वं स्वीक्रियते, वेदं लक्ष्यीकृत्य धर्मो व्याख्यास्यते। यतः (तद्वचनात्) ईश्वरवचनात्—ईश्वरस्य[2] प्रवचनात्, वेदः खलु ईश्वरप्रवचनम् "प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्" (यजुः० ३४.५७) तथा च प्रशस्तपादः "तच्चेश्वरचोदनाभिव्यक्ताद्धर्मादेव" (प्रशस्तपादः)॥ ३॥

अस्मिञ्छास्त्रे व्याख्यातव्यो धर्मो न चैहिक इह लोके फलप्रदो मनुस्मृत्यादिधर्मशास्त्रप्रतिपाद्यो वर्णाश्रमधर्मो न चामुष्मिकः परजन्मनि फलप्रदो

१. अधिकरणार्थे ल्युट्।

२. 'तत्' इति सर्वनाम प्रसिद्धमिदं ब्रह्मनाम "ओ३म् तत् सत्"।

मीमांसाशास्त्रवर्णितः कर्मकाण्डाख्यः, अपि तूभाभ्यां भिन्नो निःश्रेयसफलो धर्मविशेषस्तत्त्वज्ञानाख्यः। उच्यते च—

**धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्॥ ४॥**

(द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानाम्) द्रव्यादीनां षण्णां पदार्थपदवाच्यानाम् (साधर्म्यवैधर्म्याभ्याम्) अन्यैः सह समानधर्मत्वेन तुल्यधर्मत्वेन तथा विरुद्धधर्मत्वेनान्योन्यव्यावर्तकधर्मत्वेन नैजिकगुणवत्त्वेन च (धर्मविशेषप्रसूतात् तत्त्वज्ञानात्) आत्मनि प्रकटीभूतधर्मविशेषात्[1] तत्त्वज्ञानात् तत्त्वज्ञानाख्यादेव धर्मविशेषप्रसूतात्, तत्त्वज्ञानमेवात्मनि प्रकटीभूतो धर्मविशेषः, ऐहिकामुष्मिकधर्माभ्यां वर्णाश्रमकर्मकाण्डरूपाभ्यां स्मृतिशास्त्रमीमांसादर्शनप्रतिपादिताभ्यां विशिष्टो यतस्तस्मात् (निःश्रेयसम्) नितान्तं श्रेयसं कल्याणं परमकल्याणं मोक्षो भवतीति शेषः॥ ४॥

तत्र षट्सु पदार्थेषु क्रमानुरोधेन द्रव्याण्युद्दिश्यन्ते—

**पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति द्रव्याणि॥ ५॥**

(पृथिवी-आपः-तेजः-वायुः-आकाशं-कालः-दिक्-आत्मा-मनः इति द्रव्याणि) 'पृथिवी, आपः, अग्निः, वायुः, आकाशः, कालः, दिक्-दिशा, आत्मा, मनः' इत्येतानि द्रव्याणि नव सन्ति॥ ५॥

गुणा उच्यन्ते—

**रूपरसगन्धस्पर्शाः संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे बुद्धयः सुखदुःखे इच्छाद्वेषौ प्रयत्नाश्च गुणाः॥ ६॥**

(रूपरसगन्धस्पर्शाः) इन्द्रियैर्द्रव्याणां प्रत्यक्षत्वे रूपगुणस्य प्राधान्यं प्रत्यक्षशब्दे साक्षात् 'अक्ष' शब्दस्य नेत्रेन्द्रियवाचित्वात्, नेत्रेन्द्रियग्राह्यो रूपगुणस्तस्मात् प्रथमं रूपगुण उपात्तः, रसस्य च गन्धापेक्षया मुख्यत्वं तस्माद्रसगुणस्ततः पूर्वं गृहीतः, भूतेष्वाकाशस्याव्यक्तत्वात्तद्गुणस्यानुमेयत्वात्[2]

---

१. धर्मविशेषश्चासौ प्रसूतश्च धर्मविशेषप्रसूतः तस्माद् धर्मविशेषप्रसूतात्। प्रसूतशब्दस्य परनिपात आर्षो राजदन्तादिषु परं तस्याकृतिगणत्वात्।

२. परिशेषाल्लिङ्गमाकाशस्य (२.२.२७)।

परीक्षणीयत्वाच्च सोऽत्र न पठितः (संख्याः) एकादिकाः परार्द्धान्ताः (परिमाणानि) इयत्ताकराणि बहुविधानि मानज्ञानानि (पृथक्त्वं संयोग-विभागौ) स्वतः पृथग्भावः पृथक्त्वम्, संयोगः सङ्गतिः, विभागो वियोगः (परत्वापरत्वे) दिक्कालावाश्रित्य परस्परापेक्षाबुद्धिजन्यौ दूरसमीपलक्षणौ व्यवहारौ (बुद्धयः) अनेकविधानि ज्ञानानि प्रात्यक्षिकानुमानिकशाब्दादीनि (सुखदुःखे) हर्षखेदौ (इच्छाद्वेषौ) अभिलाषाभिद्रोहौ (प्रयत्नाः च गुणाः) वागिन्द्रियशरीरव्यवहाराः। चकारो लोकप्रसिद्धगुणानां समुच्चयार्थस्ते च गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाः, एवं चतुर्विंशतिगुणाः। ''रूपरस-गन्धस्पर्शपरत्वापरत्वगुरुत्वद्रवत्वस्नेहवेगा मूर्तानां गुणाः, बुद्धिसुखदुःखेच्छा-द्वेषप्रयत्नधर्माधर्मभावनाशब्दा अमूर्तानां गुणाः, संख्यापरिमाणपृथक्त्वसंयोग-विभागा उभयेषां गुणाः'' इति प्रशस्तपादः ॥ ६ ॥

कर्माणि खल्वपि प्रदर्श्यन्ते—

**उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्माणि ॥ ७ ॥**

(उत्क्षेपणम्) क्रियाया ऊर्ध्वं प्रवृत्तिः, यथा मुषलोत्थापनम् (अवक्षेपणम्) क्रियाया अधःप्रवृत्तिः, यथा मुषलादिकस्याधः पतनम् (आकुञ्चनम्) समन्ताद् वेष्टनं समूहनं सम्मूर्च्छनं पिण्डीभवनम् (प्रसारणम्) पिण्डस्य राशेर्वा विकीर्णीभवनं विकीर्णीकरणं वा (गमनम्) गतिकर्म नानागतयोऽनुक्ताः सर्वाः क्रियाः खलु गमननाम्ना विज्ञेयाः, यथा नर्तन-स्पन्दनपरिभ्रमणधावनविरेचनाद्याः (कर्माणि) कर्मनामानि सन्ति ॥ ७ ॥

द्रव्यगुणकर्माणि खल्वर्थाः, तदवस्थितास्तत्समवेताः सामान्यविशेष-समवाया अर्थशब्दवाच्यानां द्रव्यगुणकर्मणां तत्त्वज्ञानाय तावत्तेषां साधर्म्य-मुच्यते—

**सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः ॥ ८ ॥**

(द्रव्यगुणकर्मणाम्) द्रव्यगुणकर्मणां त्रयाणां खलु (अविशेषः) समानो धर्मः साधर्म्यम् (सत्) सत्ता वर्तमानत्वं स्वोपब्धिकाले विद्यमानत्वम् (अनित्यम्) अनित्यत्वं विनाशित्वमन्यत्र नित्यद्रव्येभ्यः (द्रव्यवत्) द्रव्याश्रयित्वं समवायिद्रव्यवत्त्वं स्वकारणद्रव्येऽन्वयित्वेन वर्तमानत्वमन्यत्र नित्यद्रव्येभ्यः कार्यद्रव्यं स्वकारणद्रव्यमाश्रयति हि तथा गुणकर्मणी तु

द्रव्यवर्तिनी भवत एव द्रव्यमन्तरेण न तयोः स्वरूपोपलब्धिः (कार्यम्) कार्यत्वं कार्यद्रव्ये हि, कार्यद्रव्यं कार्यगुणः कार्यकर्म (कारणम्) कारणत्वम्, कार्यद्रव्यस्य द्रव्यं कारणं, गुणश्च कारणं गुणान्तरस्य, कर्मापि कारणं भवति हि संयोगविभागवेगानाम् (सामान्यविशेषवत्) सामान्यं च विशेषश्च सामान्यविशेषौ तद्वत्त्वं सामान्यवत्त्वं विशेषवत्त्वं च, अनुवृत्तिधर्मत्वं सामान्यं व्यावृत्तिधर्मत्वं विशेषः, सामान्यं यथा द्रव्यं सद् गुणः सन् कर्म सत् तदिदं सत्तावत्त्वं तद्वत्त्वं सामान्यं तथा द्रव्येषु द्रव्यत्वं गुणेषु गुणत्वं कर्मसु कर्मत्वं सामान्यं तद्वत्त्वं जातिमत्त्वम्। विशेषो यथा द्रव्यं गुणकर्मभ्यां विशिष्टधर्मं गुणो द्रव्यकर्मभ्यां विशिष्टधर्मः कर्म द्रव्यगुणाभ्यां विशिष्टधर्मम्, एवं विशेषवत्त्वं द्रव्यगुणकर्मणां स्वस्वरूपे हि खल्वन्योऽन्यभिन्नधर्मवत्त्वं भवति विशेषः, तथा द्रव्यादिषु गवादयो द्रव्याणि रूपादयो गुणा उत्क्षेपणादीनि कर्माणि व्यक्तयो विशेषाः, तद्वत्त्वं च तेषामपि विशेषवत्त्वमित्युत्प्रेक्ष्यम्॥ ८॥

द्रव्यगुणयोः साधर्म्यं समानधर्मः प्रोच्यते—

**द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम्॥ ९॥**

(द्रव्यगुणयोः) द्रव्याणां गुणानां च (सजातीयारम्भकत्वम्) समानजातीयानामुत्पादकत्वम् (साधर्म्यम्) समानधर्मवत्त्वमस्ति॥ ९॥

तदेवोच्यते—

**द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्॥ १०॥**

(द्रव्याणि द्रव्यान्तरम्) द्रव्याणि[१] खलु स्वसमानमन्यसत्ताकं द्रव्यमेव (च) अथ च (गुणाः-गुणान्तरम्) गुणा अपरगुणम्[२] (आरभन्ते) उत्पादयन्ति॥ १०॥

किन्तु—

**कर्म कर्मसाध्यं न विद्यते॥ ११॥**

(कर्म) कर्म खलु (कर्मसाध्यम्) कर्म [अस्ति] साध्यं यस्य तथाभूतम् (न विद्यते) न लभ्यते, तस्य क्षणिकत्वात् तस्य तथास्वभावात् कर्मसाध्यत्वाभावात् कर्मसाध्यसामर्थ्याभावात्॥ ११॥

अथ वैधर्म्ये, द्रव्यस्य गुणकर्मभ्यां वैधर्म्यं प्रदर्श्यते—

---

१. अन्त्यावयविद्रव्याणि विभुद्रव्याणि च विहाय न ह्येतानि स्वसदृशद्रव्याणि खलूत्पादयन्ति।

२. अन्त्यावयविगुणान् द्वित्वद्विपृथक्त्वपरत्वापरत्वादींश्च गुणान् परित्यज्य।

## न द्रव्यं कार्यं कारणं च वधति॥ १२॥

(द्रव्यम्) द्रव्यपदवाच्यं वस्तु (कार्यं कारणं च न वधति) स्वकार्यं स्वान्वयि द्रव्यं कार्यभूतं तथानुगतगुणं कार्यमेवं कारणं च स्वकारणं समवायिकारणद्रव्यमथासमवायिकारणं संयोगादिगुणं च न हन्ति॥ १२॥

गुणाः कीदृशा इत्यत्रोच्यते—

## उभयथा गुणाः॥ १३॥

(गुणाः-उभयथा) गुणाः खलूभयप्रकाराः, ते कार्यं कारणं घ्नन्ति नापि घ्नन्ति। सूत्रशैल्याऽयमर्थोऽभिव्यज्यते सूत्रस्यार्थस्वारस्यमत्रैवास्ति। उभयथा शब्देन नकारस्वीकारावेव ग्रहीतुं युज्येते, यदि तूभयथाशब्देन कार्यकारणयोर्ग्रहणमभीष्टं स्यात् तदा तु "न तथा गुणाः" इति सूत्रेण भवितव्यम्। ते गुणास्तु कार्यकारणवधका एवेत्यर्थः समापद्येतानायासेन। यद्यप्युपस्कारविवृत्तिव्याख्ययोरेषोऽर्थो विहित परन्तु न स सूत्रशैल्या लभ्यते। चन्द्रकान्तभाष्यं तु सूत्रानुसारि प्रतिभाति 'वधति च नापि वधति' उभयथा प्रवृत्तिर्गुणानाम्। यथा हरिद्राचूर्णयोः पीतत्वश्वेतत्वे उभे कारणभूते तत्कार्येण लोहितेन रूपेण गुणेन हन्येते, तन्तूनां रूपं वस्त्रगतरूपस्य कारणं तन्न वस्त्रगतेन कार्येण रूपेण हन्यते, आद्यः शब्दः कारणभूतः स्वानन्तरं कार्यं न हन्ति, संयोगाज्जायमानः शब्दः स्वकारणस्य संयोगस्य स्थितत्वान्नश्यति हि॥ १३॥

कर्म पुनः कीदृशमिति कथ्यते—

## कार्यविरोधि कर्म॥ १४॥

(कार्यविरोधि कर्म) कार्यं विरोधि यस्य तथाभूतं कर्म, कर्म खलु स्वकार्येण विरुध्यते विरम्यते विनश्यते, यद्वा कार्यस्य विरोधि कर्म कार्यकाले नावतिष्ठते। कर्म खलु न कारणवधकं नापि कार्यवधकं किन्तु तत्तु वध्यमेवास्ति संयोगादिना स्वकार्येण कार्यद्वारेण कर्मणो वध्यत्वात्, अथ च पुनः प्रवृत्तं कर्म पूर्वोत्पादितं संयोगं कार्यं विरुणद्धि विनाशयतीति द्रव्य-गुणाभ्यां वैधर्म्यं कर्मणः॥ १४॥

द्रव्यगुणकर्मणां साधर्म्यमुक्त्वाऽधुना क्रमेण तेषां लक्षणमर्थात् परस्परतो वैधर्म्यं प्रदर्शयति तत्र तावद् द्रव्यम्—

## क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम्॥ १५॥

(क्रियागुणवत्) क्रिया च गुणश्च यस्य यस्मिन् वा विद्यते तत्

क्रियागुणवत्, क्रिया खलूत्क्षेपणादि कर्म गुणश्च रूपादिः। क्रियागुणावुभौ यद्वा द्वयोरेको गुणो यस्य यस्मिन् वा स्यात् तद् द्रव्यं भवतीति च वक्तुं शक्यते न तु केवला क्रिया विद्यते यस्य यस्मिन् वा न हि गुणमन्तेरण क्वचित् क्रियाऽवतिष्ठते न च गुणहीनानि द्रव्याणि भवन्ति क्रियामन्तरेण गुणोऽवस्थातुं शक्नोति निष्क्रियाणि खल्वनवयवानि जडानि द्रव्याणि दिक्कालाकाशास्तु भवन्ति हि तस्मात् तेषां गुणवत्त्वेन द्रव्यसंज्ञा। तथाऽनवयव आत्मा द्रव्यं तस्य क्रियावत्त्वं क्रियास्वामित्वात् क्रियाकरणे समर्थत्वात् क्रिया यस्यास्तीति हेतोः क्रियावान् खल्वात्मागुणास्तु तत्र ज्ञानादयः सन्ति। अथ क्रिया यस्मिन् विद्यते तद् द्रव्यमित्यपि सावयवेषु जडेषु पृथिव्यादिषु द्रव्येषु तु क्रिया तदवयवेषु व्याप्रियते। अथ चानवयवेषु दिक्कालाकाशेषु व्यापिद्रव्येषु खल्वपि क्रिया प्रवर्तते तेषामनिवार्याधारत्वात् तत्रापि तथाभूतक्रियावत्त्वोत्प्रेक्षणे न क्षतिः[१] (समवायिकारणम्) कार्यद्रव्यं गुणं कर्म च स्वस्मिन् समवेतुं समावेशितुं शीलं यस्य तत् समवायिकारणं कार्यद्रव्योत्पादशक्तिमत्, जाते कार्यद्रव्ये तदन्तरे वर्तमानं कार्यनाशेऽप्यनश्वरं सत्, गुणकर्मभ्यां च लक्षित-सत्ताकं गुणकर्मणोरविनाभावाधारः (इति द्रव्यलक्षणम्) इत्थं द्रव्यलक्षणं द्रव्यमस्तीति लक्षितव्यम्। गुणकर्मभ्यां वैधर्म्यमेतद् द्रव्यस्य, गुणा न गुणवन्तो न च कर्मवन्तः, कर्माणि न गुणवन्ति न कर्मवन्ति। न च गुणाः कर्माणि वा समवायिकारणानि भवन्ति, असमवायिकारणानि तु भवन्ति स्वकार्यस्य, एवं सामान्यादिष्वपि ज्ञातव्यम्॥ १५॥

अथ गुणस्य लक्षणं यद्वा गुणस्य द्रव्यकर्मभ्यां वैधर्म्यमुच्यते—

**द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्॥ १६॥**

(द्रव्याश्रयी) द्रव्यमाश्रयतीति तच्छीलो द्रव्यनिष्ठ इत्यर्थः, गुणो न द्रव्यवत् स्वतन्त्रसत्ताकः, इति गुणस्य कारणद्रव्यतो वैधर्म्यम् (अगुणवान्) न गुणो

---

१. उक्तं हि सूत्रकृता ''गुणैर्दिग्व्याख्याता'' (वै० ५.२.२५) पूर्वस्यामुदितः पश्चिमायामस्तंगतः, पूर्वस्याम् आगतः पश्चिमायां गतः, कर्मणो दिगसमवायि-कारणमिति दिग्विषये। ''कारणेन कालः'' (वै० ५.२.२६) दिने जातो रात्रौ वसन्ते पुष्प्यन्ते वर्षर्तावुत्पद्यन्ते काले नश्यन्ते, कालः कर्मणो निमित्तकारणम्। इति कालविषये ''निष्क्रमणं प्रवेशनमित्याकाशस्य लिङ्गम्'' (वै० २.१.२०) निष्क्रमणप्रवेशनक्रियाया आधार आकाशः इत्याकाशविषये।

यस्मिन् स गुणरहितः, गुणे न गुणो भवतीति कार्यद्रव्यतो वैधर्म्यं कार्यद्रव्यं कारणद्रव्यमाश्रयत् सद् गुणवद् भवति हि (संयोगविभागेषु-अकारणम्-अनपेक्षः) संयोगविभागेषु कारणं न भवति, संयोगविभागान् विहायान्येषु गुणेषु तु गुणः कारणं भवति हि, उक्तं यथा ''गुणा गुणान्तरमारभन्ते'' संयोगविभागेषु नैष नियमः, संयोगजः संयोगो विभागजश्च विभागस्तु भवति हि। न च गुणः संयोगविभागानपेक्षते तैः सह न सम्बध्यते गुणः, कर्म तु संयोगविभागाननपेक्षमाणं सदपि तेषां कारणं भवतीति कर्मतो वैधर्म्यं गुणस्य। कार्यद्रव्यं स्वकारणद्रव्याणां संयोगमपेक्षते यावत् कार्यद्रव्यं तावत् कारणद्रव्याणां संयोगेन भवितव्यमेव, यद्वा यावत् कारणद्रव्याणां संयोगस्तावदेव कार्यद्रव्यस्य स्थितिः। कारणद्रव्याणि निजस्थितौ निजस्वरूपे वा विभागमपेक्षन्ते हि। संयोगविभागान् विहाय तु खल्वन्यान् गुणान् गुणा अपेक्षेरन्निति सम्भवः, यथारूपं स्पर्शमपेक्षते यत्र रूपं तत्र स्पर्शेनापि भवितव्यमेवेत्येवं गुणलक्षणं भवति॥ १६॥

अधुना कर्मणो लक्षणं किं वा तस्य द्रव्यगुणाभ्यां वैधर्म्यमुच्यते—

**एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्॥ १७॥**

(एकद्रव्यम्) एकं द्रव्यं यस्याश्रय इति तदेकद्रव्यमेकद्रव्यवर्ति, एकैकं द्रव्यमाश्रयत् सदेकैकं कर्म भवति न खल्वनेकद्रव्यवर्ति भवत्येकं कर्म, अवयविद्रव्ये यद्वाऽवयवद्रव्ये खल्वेकैकश एव कर्म भवति, तथा परमाणुष्वाद्यं कर्माप्येकैकशोऽनुमेयम्। इति कार्यद्रव्यतो वैधर्म्यमस्ति कार्यद्रव्यमनेककारणद्रव्याश्रितं भवति, तथा गुणतोऽप्यांशिकं वैधर्म्यं यतो गुण एकद्रव्याश्रितोऽवयविद्रव्याश्रितो रूपादिरनेकद्रव्याश्रितोऽनेकावयवाश्रितश्च संयोगादिर्द्वित्वादिश्च गुणो भवति (अगुणम्) न गुणो यस्मिंस्तथा कर्माविद्यमानगुणम्, अभिव्यक्तानभिव्यक्ताभिव्यज्यमानगुणसम्पर्को यस्मिन् नास्ति तत्खलु कर्म, इति द्रव्यतो वैधर्म्यं विज्ञेयं द्रव्येष्वेवानभिव्यक्ताभिव्यक्ताभिव्यज्यमानगुणयोगो भवति परमाणु द्रव्येष्वनभिव्यक्तगुणत्वमुत्पन्नेऽवयविद्रव्येऽभिव्यक्तगुणभाव उत्पद्यमाने चाभिव्यज्यमानगुणवत्ता भवति हि (संयोगविभागेषु-अनपेक्षकारणम्) संयोगेषु विभागेषु चानपेक्षं सत् कारणं भवति। संयोगानां विभागानां च कारणं कर्म, कर्मजन्याः संयोगविभागास्तत्र कारणं सदपि भवत्यनपेक्षं तस्यास्थिरत्वात्, इति द्रव्यतो गुणतश्च वैधर्म्यमस्ति द्रव्येण गुणेन च स्वकार्यमपेक्षमाणेन स्थातव्यम्। तथा तस्य संयोगा

विभागाश्च कार्याणीत्यपि वैधर्म्यं ताभ्यामिति कर्मलक्षणं विज्ञेयम्॥ १७॥

द्रव्यगुणकर्मणां लक्षणं यद्वा तेषामन्योऽन्यतो वैधर्म्यमुक्त्वाऽधुना तेषामेव त्रयाणां कार्यत्वे कारणसाधर्म्यमाह—

**द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम्॥ १८॥**

(द्रव्यगुणकर्मणां कारणं द्रव्यम्) द्रव्यगुणकर्मणां त्रयाणां कारणं द्रव्यमिति (सामान्यम्) तेषां कार्यत्वापन्नानां साधर्म्यमस्ति, यथा कार्य-द्रव्याणि कारणद्रव्यमाश्रयन्ति तथा गुणाः कर्माणि चापि तदाश्रयन्ति तेषां त्रयाणां तस्य समवायिकारणत्वात् त्रयाणामपि द्रव्यं समवायिकारणमिति विवेकः॥ १८॥

गुणश्च खलु—

**उभयथा गुणः॥[१] १९॥**

(गुणः) द्रव्यगुणकर्मणां गुणः कारणं सामान्यम् (उभयथा) उभयथा दृश्यते, कश्चिद् गुणो भवति कारणं सामान्यं कश्चन गुणो नापि भवति। तत्र यथा-अवयवानां संयोगो गुणोऽवयविद्रव्यस्यासमवायिकारणं भवति परन्तु रूपादिगुणो न कारणं भवति द्रव्यस्य। अवयवानां रूपादिगुणोऽवयविद्रव्य-स्थरूपादिगुणस्य कारणं भवति। परन्तु संख्यादिगुणोऽवयवगतोऽवयवि-संख्यागुणस्य न कारणं भवति। अवक्षेपणादिकर्मणो कारणं गुरुत्वादिगुणो भवति परन्तु रूपादिगुणस्तत्र न कारणम्, तदत्र प्रसङ्गे गुणोऽसमवायिकारणं भवति। शङ्करमिश्रजयनारायणाभ्यां सूत्रमन्यथा व्याख्यातम् 'उभयथा' स्थाने 'तथा' शब्दमाश्रित्य॥ १९॥

कर्मविषये खलूच्यते—

**संयोगविभागवेगानां कर्म समानम्॥ २०॥**

(संयोगविभागवेगानाम्) विभक्तानां पृथग्भूतानां सहभावः संयोगः, संयुक्तानां पृथग्भावो विभागः, स्वभावप्रतिबन्धकबलं वेगः, एषाम् (कर्म समानम्) कर्म खलु समानं कारणं[२] भवति तच्च तेषां साधर्म्यम्। कर्म हि संयोगं विभागं वेगं जनयति। संयोगविभागौ तु खल्वनेकद्रव्येषु भवतो यथा पटोत्पत्तये तन्तुषु संयोगं विदारणाय विभागं जनयति कर्म परन्तु वेगमेकस्मि-

---

१. एष चन्द्रकान्तभाष्यपाठः समीचीनः अन्यत्रत्यस्तु 'तथा गुणः' यद्येवं स्यात्, तर्हि पूर्वं सूत्रं ''द्रव्यगुणकर्मणां द्रव्यगुणौ कारणं सामान्यम्'' इत्येवं स्यात्।

२. असमवायिकारणम्।

न्नेव द्रव्ये जनयति, यथा शरे। पुनः 'समानम्' इति शब्दोपादानं पूर्वसूत्रगत-गुणविषयकसामान्यस्योभयथात्वं विकल्पं वारयितुम्॥ २०॥

पुनश्च—

**न द्रव्याणां कर्म॥ २१॥**

**व्यतिरेकात्॥ २२॥**

अनयोः सूत्रयोरेकवाक्यताऽस्ति यद्वा सूत्रमेकं स्याच्चन्द्रकान्तभाष्यानु-सारि—

(द्रव्याणां कर्म न) द्रव्याणां कर्म कारणमसमवायि वा निमित्तं वा न भवति[१]। संयोगविभागवेगानां गुणानां तु कर्म कारणं भवति यद्यपि तन्तुषु कर्मणा पटद्रव्यस्योत्पत्तिर्भवति परन्तु तन्तुषु वर्तमानं तत् कर्म पटद्रव्यस्य कारणं दर्शनशास्त्रे न स्वीक्रियते, लोके तथा दृश्यते कर्मकारणमत एवाशङ्क्यते हि तस्य कारणत्वं तस्मात् तदाशंकानिवृत्तयेऽत्रोच्यते कर्म न द्रव्याणां कारणम्। कुतः (व्यतिरेकात्) अनन्वयात्—व्यतिरिक्तत्वात् कर्मणः, व्यतिरिक्तं हि कर्म पटात्, कर्मणा तन्तुषु संयोगो जायते संयोगादनन्तरं पटद्रव्यम्, संयोगस्य कारणं कर्म, संयोगं प्रति कर्मणः कारणत्वं चरितार्थं पुनः संयोगं व्यतिरिच्य व्यतिक्रम्य व्यवधाय कर्मणः कारणत्वं पटं प्रति न यौक्तिकम्। भवतु पटस्य कारणं कर्म परम्परया न तु साक्षादिति सूत्रकारस्य लक्ष्यम्। उक्तं हि स्वयं सूत्रकारेण दशमाध्याये कर्मणोऽसमवायिकारणत्वं परम्परया ''कारणे समवा-यात् कर्माणि'' (वै० १०.२.३) 'व्यतिरेकात्' पदमन्यभाष्यकारैरन्यथा-व्याख्यातम्। तत्र व्यतिरेकशब्दस्य निवर्तनमभावश्चार्थविहितो यत् ''कर्मणः संयोगो जायते संयोगाद् द्रव्यमुत्पद्यते निवृत्ते कर्मणि यद्वा द्रव्योत्पत्तिसमये कर्मणोऽभावस्तस्मान्न कर्मकारणमिति व्याख्यातम्।'' कर्मणो निवर्तनम-भावो वा केवलमुत्पन्ने द्रव्ये हि न किन्तु संयोगे जातेऽपि तु कर्मणो निवर्त-नमभावश्च भवति तस्माद् व्यतिरेकशब्दस्यात्रार्थो निवर्तनमभावश्च नेष्यते॥ २१-२२॥

कारणसाधर्म्यमुक्त्वा कार्यसाधर्म्यमाह—

**द्रव्याणां द्रव्यं कार्यं सामान्यम्॥ २३॥**

(द्रव्याणां द्रव्यं कार्यम्) द्रव्याणामिति बहुवचनमनेकार्थम्, द्वयोरवय-

---

१. पुरुषप्रयत्नं कर्म विहाय, पुरुषप्रयत्नस्तु भवति निमित्तकारणम्।

योर्द्रव्ययोर्बहूनां वाऽवयवानां द्रव्याणां कार्यमेकद्रव्यं यथा द्वयोरर्धगोलयोर्गोलः कलशः कन्दुकं वा बहूनां तन्तूनामेकः पटोऽवयविद्रव्यं भवति। तत् (सामान्यम्) एकद्रव्योत्पादकत्वं द्रव्याणां साधर्म्यमस्ति॥ २३॥

गुणानां गुणः कार्यं सामान्यं त्वग्रे वक्ष्यते विस्तरेण संक्षिप्तविषयत्वात् कर्मणां कर्मसामान्यविषये पूर्वमुच्यते—

**गुणवैधर्म्यान्न कर्मणां कर्म॥ २४॥**

(कर्मणां कर्म न) कर्मणां कर्म सामान्यं कार्यं न भवति (गुणवैधर्म्यात्) गुणशब्दोऽत्र स्वभाववाची स्वभाववैधर्म्यात्। अस्थिरत्वं क्षणिकत्वं वा कर्मणां स्वभावः, अस्थिराणां क्षणिकानां न मिश्रीभावः कार्यात्मना सम्भवतीति स्वभाववैधर्म्यम्। द्रव्याणां गुणानां मिश्रीभावस्तु भवति कार्यात्मना तेषां स्थिरत्वात् स्थिरधर्मवत्त्वात् स्थिरस्वभाववत्त्वात्[१] पूर्वं तु "कर्म कर्मसाध्यं न विद्यते" इति कारणसामान्येनोक्तम्, अत्र खलु कार्यसामान्येनोच्यते यदनेकेषां कर्मणामेकं कार्यसामान्यमपि न भवतीत्यपौनरुक्त्यम्॥ २४॥

कार्यसामान्यप्रकरणे द्रव्याणां सामन्यं कार्यं प्रकृतं तत्रैवेदमुच्यते—

**द्वित्वप्रभृतयः संख्याः पृथक्त्वसंयोगविभागाश्च॥ २५॥**

(द्वित्वप्रभृतयः संख्याः) द्वित्वत्रित्वपरार्द्धान्तः संख्यात्मको गुणः (पृथक्त्वसंयोगविभागाः-च) तथा पृथक्त्वं संयोगो विभागश्च गुणः सामान्यं कार्यं द्रव्याणां भवति॥ २५॥

किं द्वित्वादिवत् कर्मापि द्रव्याणां सामान्यं कार्यं भवति न वेत्य-त्रोच्यते—

**असमवायात् सामान्यकार्यं कर्म न विद्यते॥ २६॥**

(सामान्यकार्यं कर्म न विद्यते) द्रव्ययोर्द्रव्याणां वा सामान्यकार्यं कर्म नोपलभ्यते न सम्भवति (असमवायात्) द्वयोर्द्रव्ययोर्बहुषु द्रव्येषु कर्मणो-

---

१. 'गुणवैधर्म्यात्' "द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यं कर्मसाध्यं न विद्यते इत्येवात्र सूत्रेणानूद्यते" शङ्करमिश्रः। पूर्वोक्तमेव भिन्नक्रमे सूत्रे हेतुत्वेनोपादानं न सम्यक्। "गुणकर्मणोर्द्रव्यसमवेतत्वं गुणसाधर्म्यं परन्तु कर्मणि गुणतो वैधर्म्यं कर्मत्वं कर्मसंज्ञा" (जयनारायणः) एतदपि न समीचीनं तर्हि नाममात्रतो वैधर्म्यं भवति। "कारणगुणा कार्यगुणमारभन्ते तथा नावयवकर्मावयविनि कर्मारभते इति गुणतो वैधर्म्यम् इति चन्द्रकान्तः। एवं द्रव्यतोऽपि वैधर्म्यं वक्तव्यं स्यात् एतदपि न युक्तम्। हरिप्रसाद वृत्तौ न विशेषः।

ऽसमवायात्। न हि द्वयोर्द्रव्ययोर्बहुषु द्रव्येषु वैकं कर्म समवायेन निस्तिष्ठति। एकस्य कर्मणः खल्वेकमेव द्रव्यं समवायिकारणं भवति। उक्तं हि कर्मलक्षणे ''एकद्रव्यम्....'' (वै० १.१.१७) एकद्रव्याश्रयि कर्म॥ २६॥

कर्मणस्तु द्रव्यारम्भकत्वं न भवति गुणस्य द्रव्यारम्भकत्वं भवति न वेति कथ्यते—

**संयोगानां द्रव्यम्॥ २७॥**

(संयोगानां द्रव्यम्) बहूनां संयोगानां द्रव्यमेकं सामान्यकार्यं भवति, यथा—तन्तुगतसंयोगानां पटः कार्यमेकं द्रव्यं सामान्यं भवति पार्थिवाद्यणु-संयोगानां पृथिव्यादिस्थूलं द्रव्यं सामान्यं कार्यं भवति॥ २७॥

केषाञ्चिद्गुणानां गुणः सामान्यं कार्यं भवतीति दशर्यत्याचार्यः—

**रूपाणां रूपम्॥ २८॥**

(रूपाणां रूपम्) अवयवद्रव्यस्थरूपाणां नीललोहितादीनामवयवि-स्थरूपं तथाभूतं सामान्यं कार्यं भवति। ''द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यम्, द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरमारभन्ते'' इति पूर्वोक्तत्वादत्र रूपाणां रूपं कथने खलूभयत्र रूपरसगन्धस्पर्शस्नेहसांसिद्धि-कद्रवत्वादीनामपि ग्रहणं कर्तव्यम्॥ २८॥

गुणानां कर्मापि सामान्यं कार्यं भवति—

**गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम्॥ २९॥**

(गुरुत्वप्रयत्नसंयोगानाम्) गुरुत्ववतो द्रव्यस्य गुरुत्वम्, आत्मप्रयत्नः, गुरुत्ववता लोष्ठादिना सह हस्तसंयोगः, इत्येषां त्रयाणाम् (उत्क्षेपणम्) ऊर्ध्वं क्षेपणं लोष्ठगतं कर्म कार्यं सामान्यं भवति। अत्रात्मप्रयत्नो निमित्तकारणं गुरुत्ववद् द्रव्यं लोष्ठादि समवायिकारणं लोष्ठादिकस्य गुरुत्वं लोष्ठादिना सह हस्तसंयोगश्चासमवायिकारणम्, तथावक्षेपणे च गुरुत्वं हस्तशैथिल्यरूपः प्रयत्नश्चासमवायिकारणमुत्प्रेक्ष्यम्॥ २९॥

कर्मणामपि सामान्यं कार्यं काचिद् गुणव्यक्तिर्भवतीत्युच्यते—

**संयोगविभागाश्च कर्मणाम्॥ ३०॥**

(कर्मणां संयोगविभागाः-च) कर्मणां द्वयोः कर्मणोर्बहूनां वा कर्मणां संयोगो विभागश्चकाराद् वेगश्च गुणः कार्यसामान्यं भवति॥ ३०॥

परन्तु द्रव्यं कर्म वा कर्मणः सामान्यं कार्यं न भवति, यतः—

